# संस्कृत व्यवहार साहस्री

## One Thousand Sentences for Conversation in Sanskrit[1]

## अनुक्रमणिका = Contents


१. शिष्टाचारः = Common formulas (Good practices)
२. मिलनम् = Meeting
३. सरल वाक्यानि = Simple sentenes
४. सामान्य वाक्यानि = Ordinary sentences
५. मित्र मिलनम् = Meeting the friends
६. प्रयाणम् = Journey
७. प्रवासतः प्रतिनिवर्तनम् = On Arrival
८. छात्राः = Students
९. परीक्षा = Examination
१०. चलनचित्रम् = Film
११. शिक्षकः = Teacher
१२. स्त्रियः = Women
१३. पाकः = cooking.
१४. वेषभूषणानि = Dress, jewellery
१५. कार्यालयः = Office
१६. आरोग्यम् = Health
१७. समयः = Time
१८. दूरवाणी = Telephone
१९. वाणिज्यम् = Commerce
२०. वातावरणम् = Weather
२१. गृहसम्भाषणम् = Domestic
२२. पितरः पुत्राः च = Fathers/sons/mothers
२३. मातापितरः = Parents
२४. सुताः = Children
२५. सङ्कीर्ण वाक्यानि = Miscellaneous sentences
२६. अतिथिः = Guests
२७. शुभाशयाः = Greetings


[1] Please send corrections to S. V. Ganesan (deepa@tiac.net) or to C. S. Raghavendra (csr@wipinfo.soft.net).
The book 'sa.nskRita-vyavahAra-sAhasrI' is published and copyrighted by Pallava Prakashan, Bangalore, India. For more details contact 'Aksharam', 8th Cross, Girinagar, Bangalore 560 085 INDIA Ph: 080-6613052, 080-6617276

# संस्कृत व्यवहार साहस्री

One Thousand Sentences for Conversation in Sanskrit[2]

---

## १. शिष्टाचारः = Common formulas (Good practices)

हरिः ॐ ! = **Hello !**

सुप्रभातम् ॥ = **Good morning.**

नमस्कारः/नमस्ते । = **Good afternoon/Good evening.**

शुभरात्रिः । = **Good night.**

धन्यवादः । = **Thank You.**

स्वागतम् । = **Welcome.**

क्षम्यताम् । = **Excuse/Pardon me.**

चिन्ता मास्तु । = **Dont worry.**

कृपया । = **Please.**

पुनः मिलामः । = **Let us meet again.**

अस्तु । = **All right./O.K.**

श्रीमन् । = **Sir.**

मान्ये/आर्ये । = **Lady.**

साधु साधु/समीचीनम् । = **Very good.**

---

## २. मिलनम् = Meeting

भवतः नाम किं ? = **What is your name? (masc.)**

भवत्याः नाम किम ? = **What is your name? (fem.)**

मम नाम '____________________ '। = **My name is '____________________'**

एषः मम मित्रं '____________________ '। = **This is my friend '____________________'**

एतेषां विषये श्रुतवान् = **I have heard of them**

एषा मम सखी '________________ '। = **This is my friend '________________' (fem.).**

भवान् किं (उद्योगं) करोति ? = **What do you do? (masc.)**

भवती किं (उद्योगं) करोति? = **What do you do? (fem.)**

अहं अध्यापकः अस्मि । = **I am a teacher (masc.)**

अहम अध्यापिका अस्मि । = **I am a teacher.(fem.)**

अधिकारी = **Officer;**

---

[2]Please send corrections to S. V. Ganesan (deepa@tiac.net) or
to C. S. Raghavendra (csr@wipinfo.soft.net).
The book 'sa.nskRita-vyavahAra-sAhasrI' is published and copyrighted by Pallava Prakashan, Bangalore, India. For more details contact 'Aksharam', 8th Cross, Girinagar, Bangalore 560 085 INDIA Ph: 080-6613052, 080-6617276

उट्टङ्ककः = **Typist**
तंत्रज्ञः = **Engineer;**
प्राध्यापकः = **Professor**
लिपिकः = **Clerk**
न्यायवादी = **lawyer**
विक्रयिकः = **Salesman;**
उपन्यासकः = **Lecturer**

अहं यन्त्राकारे कार्यं करोमि । = **I work in a factory.**

कार्यालये = **in an office;**
महाविद्यालये = **in a college**
वित्तकोषे = **in a bank;**
चिकित्सालये = **in a hospital**
प्रौढशालायां = **in a high school;**
यन्त्राकारे = **in a factory**

भवान्/भवती कस्यां कक्ष्यायां पठति ? = **Which class are you in?**
अहं नवमकक्ष्यायां पठामि । = **I am in Std.IX.**
अहं क्रकक्ष्यायां पठामि । = **I am in I/II/III/B.Sc. class.**
भवतः ग्रामः ? = **Where are you from?**
मम ग्रामः '__________________________ '। = **I am from __________________________**
कुशलं वा ? = **How are you ?**
कथमस्ति भवान् ? = **How are you ?**
गृहे सर्वे कुशलिनः वा ? = **Are all well at home?**
सर्वं कुशलम् । = **All is well.**
कः विशेषः ? ( का वार्ता ?) = **What news?**
भवता एव वक्तव्यम् । = **You have to say.**
कोऽपि विशेषः ? = **Anything special?**
भवान् (भवती) कुतः आगच्छति ? = **Where are you coming from?**
अहं शालातः, गृहतः, ....तः = **I am coming from school/house/....**
भवान्/भवती कुत्र गच्छति ? = **Where are you going?**
भवति वा इति पश्यामः । = **Let us see if it can be done.**
ज्ञातं वा ? = **Understand ?**
कथं आसीत् ? = **How was it?**
अङ्गीकृतं किल ? = **Agreed?**
कति अपेक्षितानि ? = **How many do you want?**
अद्य एव वा ? = **Is it today?**

इदानीं एव वा ? = **Is it going to be now?**
आगन्तव्यं भोः । = **Please do come.**
तदर्थं वा ? = **Is it for that ?**
तत् किमपि मास्तु । = **Don't want that.**
न दृश्यते ? = **Can't you see?**
समाप्तं वा ? = **Is it over?**
कस्मिन् समये ? = **At what time?**
तथापि = **even then**
आवश्यकं न आसीत् । = **It was not necessary.**
तिष्ठतु भोः । = **Be here for some more time.**
स्मरति किल ? = **Remember, don't you?**
तथा किमपि नास्ति । = **No, it is not so.**
कथं अस्ति भवान् ? = **How are you?**
न विस्मरतु । = **Don't forget.**
अन्यच्च = **besides**
तदनन्तरम् = **then**
तावदेव किल ? = **Is it only so much?**
महान् सन्तोषः । = **Very happy about it.**
तत् तथा न ? = **Is it not so?**
तस्य कः अर्थः ? = **What does it mean?**
आं भोः । = **Yes, Dear, Sir.**
एवमेव = **just**
अहं देवालयं/कार्यालयं/विपणिं गच्छामि = **I am going to temple/office/market.**
किं चिराद् दर्शनं ? = **What is the matter ? You are not seen these days.**
भवन्तं कुत्रापि दृष्टवान् ।= **I remember to have seen you somewhere.**
भवान् सम्भाषणशिबिरं आगतवान् वा ? = **Have you come to the conversation camp ?**[3]
तर्हि कुत्र दृष्टवान् ? = **In that case where have I seen you?**
तर्हि तत्रैव दृष्टवान् ।= **I must have seen you there in that case.**

---

## ३. सरल वाक्यानि = Simple sentenes

तथैव अस्तु । = **Let it be so/so be it.**
जानामि भोः । = **I know it.**
आम्, तत् सत्यम् । = **Yes,that is right.**
समीचीना सूचना । = **A good suggestion indeed.**

[3] Note:In the place of 'yushhmad.h shabdaH'(tvam.h), here 'bhavat.h shabdaH'(bhavAn.h/bhavatI) is used for the convenience of Samskrita conversation learning. (The verb used for 'bhavAn.h/bhavatI'is III Person Singular instead of II Person singular).

किंचित् एव । = **A little.**
किमर्थं तद् न भवति ? = **Why can't that be done ?**
भवतः नाम । = **Leave it at that.**
ओहो ! तथा वा ? = **Oh! Is that so ?**
एवमपि अस्ति वा ? = **Is it like this ?**
अथ किम् ? = **Then ?**
नैव किल ! = **No**
भवतः ! = **Yes**
आगच्छन्तः । = **Come in.**
उपविशन्तः । = **Please sit down.**
सर्वथा मास्तः । = **Definitely no.**
अस्तः वा ? = **Can that be so ?**
किमर्थं भोः ? = **Why ?**
प्राप्तं किल ? = **You have got it, haven't you ?**

---

## ४. सामान्य वाक्यानि = Ordinary sentences

प्रयत्नं करोमि । = **I will try.**
न शक्यते भोः । = **No, I can't.**
तथा न वदतः । = **Don't say that.**
तत्र कोऽपि सन्देहः नास्ति । = **There is no doubt about it.**
तद् अहं न ज्ञातवान् । = **I didn't know that.**
कदा ददाति ? = **When are you going to give me ?**
अहं कथं वदामि 'कदा इति' ? = **How can I say when ?**
तथा भवति वा ? = **Can that be so ?**
भवतः समयावकाशः अस्ति वा ? = **Are you free ?**
अद्य भवतः कार्यक्रमः कः ? = **What are your programmes for today ?**
अरे ! पादस्य / हस्तस्य किं अभवत् ? = **Oh! What happened to your legs/arms?**
बहुदिनेभ्यः ते परिचिताः । = **I have known him for long ( shouldn't be'them' for 'him'? May be plural'te' is used for a VVIP))**
तस्य कियद् धैर्य/धाष्ट्र्यम् ? = **How dare he is ?**
भवान् न उक्तवान् एव । = **You have not told me..**
अहं किं करोमि ? = **What can I do ?**
अहं न जानामि । = **I don't know.**
यथा भवान् इच्छति तथा । = **As you wish/say.**
भवतः, चिन्तां न करोतः = **Yes, don't bother.**
तेन किमपि न सिध्यति । = **There is no use/nothing hppenns on account of that.**

सः सर्वथा अप्रयोजकः । = He is good for nothing.

पुनरपि एकवारं प्रयत्नं कुर्मः । = Let us try once more.

मौनमेव उचितम् । = Better be quiet.

तत्र अहं किमपि न वदामि । = I do not want to say anything in this regard/No comments, please/I must think before I say anything.

तर्हि समीचीनम् । = O.K. if that is so.

एवं चेत् कथम् ? = How to get on, if it is so ?

मां किञ्चित् स्मारयतु । = Please remind me.

तं अहं सम्यक् जानामि । = I know him well.

तदानीमेव उक्तवान् किल ? = Haven't I told you already ?

कदा उक्तवान् भोः ? = When did you say so ?

यत्किमपि भवतु । = Happen what may.

सः बहु समीचीनः = He is a good fellow.

सः बहु रूक्षः । = He is very rough.

तद्विषये चिन्ता मास्तु । = Don't worry about that.

तथैव इति न नियमः । = It is not like that.

कर्तुं शक्यं, किञ्चित् समयः अपेक्षते । = I/We can do it, but require time.

एतावत् अपि कृतवान् ! = At least he has done this much !

द्रष्टुं एव न शक्यते । = Can't see it.

तत्रैव कुत्रापि स्यात् । = It may be somewhere there.

यथार्थं वदामि । = I am telling the truth.

एवं भवितुं अर्हति । = This is O.K./all right.

कदाचित् एवमपि स्यात् । = It may be like this sometimes.

अहं तावदपि न जानामि वा ? = Don't I know that much ?

तत्र गत्वा किं करोति ? = What are you going to do there ?

पुनः आगच्छन्तु । = Come again.

मम किमपि क्लेशः नास्ति । = It is no trouble (to me).

एतद् कष्टं न । = This is not difficult.

भोः, आनीतवान् वा ? = Have you brought it ?

भवतः कृते कः उक्तवान् ? = Who told you this ?

किञ्चिदनन्तरं आगच्छेत् । = He/It may come sometime later.

प्रायः तथा न स्यात् । = By and large, it may not be so.

चिन्ता मास्तु, श्वः ददातु । = It is no bother, return it tomorrow.

अहं पुनः सूचयामि । = I will let you know.

अद्य आसीत् वा ? = Was it today ?

अवश्यं आगच्छामि । = Certainly, I will come.

नागराजः अस्ति वा ? = **Is Nagaraj in ?**

किमर्थं तत् एवं अभवत् ? = **Why did it happen so ?**

तत्र आसीत् वा ? = **Was it there ?**

किमपि उक्तवान् वा ? = **Did you say anything ?**

कुतः आनीतवान् ? = **Where did you bring it from ?**

अन्यत् कार्यं किमपि नास्ति । = **Don't have any other work.**

मम वचनं शृणोतु । = **Please listen to me.**

एतत् सत्यं किल ? = **It is true, isn't it ?**

तद् अहं अपि जानामि । = **I know it myself.**

तावद् आवश्यकं न । = **It is not needed so badly.**

भवतः का हानिः ? = **What loss is it to you ?**

किमर्थं एतावान् विलम्बः ? = **Why are you late ?**

यथेष्टं अस्ति । = **Available in plenty.**

भवतः अभिप्रायः कः ? = **What do you say about it ?/What is your opinion ?**

अस्य किं कारणम् ? = **What is the reason for this ?**

स्वयमेव करोति वा ? = **Do you do it yourself ?**

तत् न रोचते ? = **I don't like it.**

उक्तं एव वदति सः । = **He has been repeating the same thing.**

अन्यथा बहु कष्टम् । = **It will be a big botheration if it is not so.**

किमर्थं पूर्वं न उक्तवान् ? = **Why didn't you say it earlier ?**

स्पष्टं न जानामि । = **Don't know exactly.**

निश्चयः नास्ति । = **Not sure.**

कुत्र आसीत् भवान् ? = **Where were you ?**

भीतिः मास्तु । = **Don't get frightened.**

भयस्य कारणं नास्ति । = **Not to fear.**

तदहं बहु इच्छामि = **I like that very much.**

कियत् लज्जास्पदम् ? = **What a shame ?**

सः मम दोषः न । = **It is not my fault.**

मम तु आक्षेपः नास्ति । = **I have no objection.**

सः शीघ्रकोपी । = **He is short-tempered.**

तीव्रं मा परिगणयतु । = **Don't take it seriously.**

आगतः एषऽवराकः । = **Camped here.(?)**

युक्ते समये आगतवान् । = **you have come at the right time.**

बहु जल्पति भोः । = **He talks too much.**

एषा केवलं किंवदन्ती । = **It is just gossip.**

किमपि न भवति । = **Nothing happens.**

एवमेव आगतवान् । = **Just came to call on you.**
विना कारणं किमर्थं गन्तव्यम् ? = **Why go there unnecessarily ?**
भवतः वचनं सत्यम् । = **You are right.**
मम वचनं कः शृणोति ? = **Who listens to me ?**
तदा तद् न स्फुरितम् । = **It did not flash me then.**
किमर्थं तावती चिन्ता ? = **Why so much botheration ?**
भवतः किं कष्टं अस्ति ? = **Tell me, what your trouble is ?**
छे, एवं न भवितव्यं आसीत् । = **Tsh,it should not have happened.**
अन्यथा न चिन्तयतः । = **Don't mistake me.**

---

## ५. मित्र मिलनम् = Meeting the friends

नमोनमः । = **Good morning/afternoon/evening**
किं भोः, दर्शनमेव नास्ति ! = **Hello, didn't see you for long !**
नैव, अत्रैव सञ्चरामि किल ! = **No, I have been moving about right here !**
किं भोः, वार्ता एव नास्ति ? = **Hello, not to be seen for a long time !**
किं भोः, एकं पत्रं अपि नास्ति ? = **Hey, You haven't even written a letter !**
वयं सर्वे विस्मृताः वा ? = **You have forgotten us all, Haven't you ?**
कथं विस्मरणं भवति भोः ? = **How can I forget you ?**
भवतः सङ्केतं एव न जानामि स्म। = **I didn't know your address.**
महाजनः संवृत्तः भवान् ! = **you have become a big man !**
भवान् एव वा ! दूरतः न ज्ञातम् । = **Is it you ? I couldn't recognise you from a distance.**
ह्यः भवन्तं स्मृतवान् । = **I remembered you yesterday.**
किं अत्र आगमनम् ? = **What made you come here ?**
अत्रैव किञ्चित् कार्यं अस्ति । = **I have some work here.**
त्वरितं कार्यं आसीत् । अतः आगतवान् । = **I am here as I have some urgent work.**
बहुकालतः प्रतीक्षां करोमि । = **I have been waiting for you for a long time.**
यानं न प्राप्तं, अत एव विलम्बः । = **Could not get the bus,hence late.**
आगच्छतः भोः, गृहं गच्छामः । = **Come, let us go home.**
इदानीं वा, समयः नास्ति भोः । = **Now? No time, you know.**
श्वः सायं मिलामः वा ? = **Shall we meet tomorrow evening ?**
अवश्यं तत्रैव आगच्छामि । = **I'll come there without fail.**
इदानीं कुत्र उद्योगः ? = **Where do you work now ?**
यन्त्राकारे उद्योगः । = **I work in a factory.**
ग्रामे अध्यापकः अस्मि । = **I am a teacher in a village.**
इदानीं कुत्र वासः ? = **Where are you put up ?**

एषः मम गृहसङ्केतः । = This is my address.
यानं आगतं, आगच्छामि । = Bus has come, bye, bye.
अस्तु, पुनः पश्यामः । = OK. Let us meet again.
पुनः अस्माकं मिलनं कदा ? = When shall we meet again ?
पुनः कदा मिलति भवान् ? = When are you going to meet me ? (again)
तद्दिने किमर्थं भवान् न आगतवान् ? = Why didn't you come that day ?
वयं आगतवन्तः एव । = We have already arrived.
भवतः समीपे संभाषणीयं अस्ति । = I have something to talk to you about.
भवान् अन्यथा गृहीतवान् । = You have mistaken me.
भवन्तं बहु प्रतीक्षितवान् । = I very much expected you.
बहुकालतः तस्य वार्ता एव नास्ति । = No news from him for days.
भवतः पत्रं इदानीं एव लब्धम् । = I have just received your letter.
किञ्चिद्दूरं अहमपि आगच्छामि । = I will walk with you for some distance.
मिलित्वा गच्छामः । = Let us go together.
तिष्ठतु भोः, अर्धार्धं काफी पिबामः । = Wait, let's have a by-two coffee (It appears to mean sharing one cup of coffee between two persons)
अस्तु, पिबामः । = Fine, let us have it.
स्थातुं समयः नास्ति । = No time to stay.
गमनात् अनक्षणमेव पत्रं लिखतु । = Write as soon as you reach there.
पुनः कदाचित् पश्यामि । = Meet you again.
यदा कदा वा भवतु, अहं सिद्धः । = I am ready any day.
तेषां कृते मम शुभाशयान् निवेदयतु । = Convey my good wishes to them/*him(Only if that person is a VIP).
किं भोः, एवं वदति ? = Hey, why do you say so ?
किञ्चित् कालं तिष्ठतु । = Please wait for some time.
भवान् एव परिशीलयतु । = Think about it, yourself.
अत्र पत्रालयः कुत्र अस्ति ? = Where is the post office, here ?
कियद्दूरे अस्ति ? = How far is it ?
वित्तकोषः कियद्दूरे अस्ति ? = How far is the bank ?
किमर्थं एवं त्वरा (संभ्रमः) ? = Why so much of confusion ?
इतोऽपि समयः अस्ति किल ? = There is still time, isn't it ?
सर्वस्य अपि मितिः भवेत् । = There should be some limit for everything.
कियद् इति दातुं शक्यम् ? = How much can I give him ?
कस्मिन् समये प्रतीक्षणीयम् ? = When shall I expect ?
गृहे उपविश्य किं करोति ? = What are you going to do by sitting at home ?
भवतः परिचयः एव न लब्धः । = Could not recognize you.

किं भोः, बहु कृशः जातः ? = **Hey, You have become very weak.**
अवश्यं मम गृहं आगन्तव्यम् । = **Please do call on us.**
सः सर्वत्र दर्वीं चालयति । = **He pokes his nose everywhere.**
यथा भवान् इच्छति । = **I am game for whatever you say.**
परिहासाय उक्तवान् भोः । = **I said it in fun, You know.**
एषः भवतः अपराधः न । = **It is not your fault.**
नैव, चिन्ता नास्ति । = **No, no trouble/botheration.**
वयं इदानीं अन्यद्गृहे स्मः । = **We live in a different home now/Changed our residence.**
भवान् मम अपेक्षया ज्येष्ठः वा ? = **Are you elder to me ?**
ओहो, मम अपेक्षया कनिष्ठः वा ? = **Younger to me, is it ?**
भवान् विवाहितः वा ? = **Are you married ?**
नैव, इदानीमपि एकाकी । = **No, still a bachelor.**
भवतः पिता कुत्र कार्यं करोति ? = **Where does your father work ?**
सः वर्षद्वयात् पूर्वमेव निवृत्तः । = **He retired two years ago.**
सः वृद्धः इव भाति । = **He looks aged.**
भवन्तः सर्वे सहैव वसन्ति वा ? = **Do all of you live together ?**
नैव, सर्वे विभक्ताः = **No, we live separately.**
भवतः वयः कियत् ? = **How old are you ?**
भवन्तः कति सहोदराः ? = **How many brothers are you ?**
वयं आहत्य अष्टजनाः । = **We are eight.**
भवान् एव ज्येष्ठः वा ? = **Are you the eldest ?**
मम एकः अग्रजः अस्ति । = **I have an elder brother.**
सः इदानीमपि बालः । = **He is still a boy.**
भवतः अनुजायाः कति वर्षाणि ? = **How old is your younger sister ?**
भवान् मा ददातु, मा स्वीकरोतु । = **Neither give, nor take anything.**
अन्यं कमपि न पृच्छतु । = **Don't ask anyone except me.**
तर्हि सर्वं दायित्वं भवतः एव । = **In that case the entire responsibility is yours.**
सर्वत्र अग्रे सरति । = **He takes the initiative in everything.**
भवन्तं गृहे एव पश्यामि । = **I will see you in your house.**
सः निष्ठावान् । = **He is very orthodox.**
यावदहं प्रत्यागच्छामि, तावद् प्रतीक्षां करोतु । = **Wait till I come.**
द्वयोः एकः आगच्छतु । = **Either of the two come.**
तस्य कृते विषयः निवेदितः वा ? = **Have you informed him about the news?**
तस्य कृते सः अत्यन्तं प्रीतिपात्रम् । = **He is closely related to him.**
भवता एतद् न कर्तव्यम् । = **You should not do this.**
यदि सः स्यात्... । = **Had he been here...**

अवश्यं आगन्तव्यं, न विस्मर्तव्यम् । = **Don't forget, please do come.**
कियत् कालं तिष्ठति ? = **How long will you be here?**
एषा वार्ता मम कर्णमपि आगता । = **I have heard of this news.**
सः स्तोकात् मुक्तः । = **He escaped narrowly.**
भवन्तं द्रष्टुं सः पुनः आगच्छति किल ? = **He is going to come back to see you. Isn't he ?**
अहं किमर्थं असत्यं वदामि ? = **Why should I tell a lie ?**
भवान् अपि एवं वदति वा ? = **Of all the people are you going to say this ?**
भवान् एवं कर्तुं अर्हति वा ? = **Can you do this ?**
भवान् गच्छतु, मम किञ्चित् कार्यं अस्ति । = **You proceed, I have some work.**
वृथा भवान् चिन्तां करोति । = **You just worry unnecessarily.**
दैवेच्छा तदा आसीत्, किं कुर्मः ? = **It was God's will. What shall we do ?**
अहं अन्यद् उक्तवान्, भवान् अन्यद् गृहीतवान् । = **I told you one thing. You understood it differently.**
एतावद् अनृतं वदति इति न ज्ञातवान् । = **I never expected that he would tell a lie.**
प्रमादतः संवृत्तम्, न तु बुद्ध्या । = **I did not do it purposely. It was just accidental.**
एषः एकः शनिः । = **This fellow is a bugbear.**
भवदुक्तं सर्वमपि अङ्गीकर्तुं न शक्यम् । = **I cannot agree with all you say.**
अहं गन्तुं न शक्नोमि । = **I cannot go.**
विषयस्य वर्धनं मास्तु । = **Don't escalate the matter.**
सर्वेऽपि पलायनशीलाः । = **All these fellows take to their heels in the face of danger.**
असम्बद्धं मा प्रलपतु । = **Don't talk foolishly.**
सर्वस्य अपि भवान् एव मूलम् । = **You are the root cause of all these.**
सुलभेन तस्य जाले पतितवान् । = **He fell into his trap easily.**
अस्माकं मिलनानन्तरं बहु कालः अतीतः । = **It is a long time since we met.**
इदानीं आगन्तुं न शक्यते । = **I cannot come now.**
भवान् अपि अङ्गीकरोति वा ? = **Do you agree ?**
भवान् अपि विश्वासं कृतवान् ? = **Did you believe that ?**
सः विश्वासयोग्यो वा ? = **Is he trustworthy ?**
किञ्चित् साहाय्यं करोति वा ? = **Would you mind helping me a bit ?**
समयः कथं अतिशीघ्रं अतीतः ! = **How quickly the time passed !**
युक्ते समये आगतवान् । = **You have come at the right time.**
एक निमेषं विलम्बः चेत् अहं गच्छामि स्म । = **I would have left if you were late by a minute.**
अहमपि भवता सह आगच्छामि वा ? = **Shall I come with you ?**
किञ्चित् कालं द्विचक्रिकां ददाति वा ? = **Would you mind lending me your bicycle for a few minutes ?**

इदानीं मया अपि अन्यत्र गन्तव्यम् । = I have to go somewhere now.
भवान् स्वकार्यं पश्यतु । = You mind your business.
शीघ्रं प्रत्यागच्छामि । = I'll be back in a short while.
आवश्यकं चेत् श्वः आनयामि । = If you want it, I shall bring it tomorow.
'मास्तु' इत्युक्तेऽपि सः न शृणोति । = I said no,but he doesn't listen to me.

---

## ६. प्रयाणम् = Journey

चीटिकां कुत्र क्रीणामि ? । = Where shall I buy a ticket ?
शीघ्रं आगच्छतु, यानं गच्छति । = Come quickly, the bus is about to start.
इदानीं एव एकं यानं गतम् । = A bus left just a few minutes ago.
अहं भवतः पार्श्वे उपविशामि । = I'll sit beside you.
किञ्चित् समञ्जनं कुर्मः । = Let us adjust a bit.
महान् जनसम्मर्दः । = Terrible rush.
परिवर्तं ददातु । = Give me the change.
अग्रे गच्छतु । = Go forward.
कदा वा निर्गच्छति ? । = What time does it start ?
शीघ्रं अवतरतु । = Get off quickly.
अग्रिमं निस्थानं अस्माकं वा ? । = Is the next station ours ?
मल्लेश्वरयानस्य का संख्या ? । = Which bus (Route No.) goes to Malleswaram?
किंसंख्याकं यानं जयनगरं गच्छति ? । = Which bus goes to Jayanagar ?
फलकमपि नास्ति, किमपि नास्ति । = No signboard, nothing.
अये, पादपथे आगच्छतु । = Hey, walk on the footpath.
मल्लेश्वरं गन्तुं कः मार्गः ? । = Which is the way to Malleswaram ?
बहुदूरे अस्ति वा ? । = Is it very far ?
एषः सङ्केतः कुत्र इति जानाति वा ? । = Could you possibly tell me where this address/place is ?
इतः केवलं दशनिमेषाणां गमनम् । = It is just ten minutes walk from here.
यानं न लब्धम् । = Missed the bus.
यानस्य निर्गमनाय इतोऽपि अर्धघण्टा अस्ति । = It is still half an hour before the bus starts.
यानं दशवादने आगच्छति । = The bus arrives at 10 0'clock.
पञ्चवादने एकं यानं अस्ति । = There is a bus at 5 0'clock.
यानं तदानीं एव आगत्य स्थितम् । = Bus has already arrived at the platform.
आरक्षणं नास्ति । = No reservation, please.
एवमेव अग्रे गच्छन्तु । = Go just along this road.
अत्रैव कुत्रचित् स्यात्, अन्वेषणं कुर्मः । = It will be somewhere here. Let us search for it.

तत्रैव अस्ति ।तत्रैव स्यात् । = **It is there./It might be there.**

अहं न जानामि, अन्यं पृच्छतः । = **I don't know, ask someone else, please.**

भवान् शीघ्रं न गच्छति चेत् यानं न मिलति । = **If you do not walk faster, you will miss the bus.**

एषः मार्गः कुत्र गच्छति ? । = **Where does this path lead to ?**

भवान् आरक्षणं कृतवान् वा ? । = **Have you reserved your seat ?**

सर्वं स्वीकृतवान् किल ? । = **You have taken everything, haven't you ?**

कृपया सर्वबन्धकं स्वीकरोतः । = **Please take your hold-all.**

स्यूतम् = **the bag.**

एतद् = **this.**

चीटिकाम् = **the ticket.**

यानस्यूतम् = **the air bag.**

यानपेटिकाम् = **the suitcase.**

वनितास्यूतम् ।= **the vanity bag.**

धनविषये जागरूको भवतः । = **Be careful with your money.**

ततः आगन्तुं एतावान् विलम्बः वा ? । = **Such a long time to come here from there ?**

एकं अपि यानं न आगतम् । = **Not a single bus has come.**

षष्टिसंख्याकं यानं गतं वा ? । = **Has Route 60 bus gone ?**

अहं इदानीं एव आगतवान् । = **I have just arrived.**

कीदृशः मार्गः अयम् ! । = **What a road !**

---

## ७. प्रवासतः प्रतिनिवर्तनम् = On Arrival

कदा आगतवान् ? = **When did you come ?**

अद्य प्रातः आगतवान् वा ? = **Did you come this morning ?**

कथं आसीत् प्रवासः ? = **How was the journey ?(cf. my remarks on the 'heading')**

प्रवासे व्यवस्था समीचीना आसीत् वा ? = **How were all the arrangements during the tour?**

कति दिनानाम् ? = **How many days ?**

एकाकी गतवान् वा ? = **Did you go alone ?**

एकाकी किमर्थम् ? परिवारसमेतः गतवान् = — **Why alone ? I went with my family.**

दिनत्रयं तत्र स्थितवान् । = **I stayed there for three days.**

मार्गमध्ये अपघातः अभवत् । = **There was an accident on the road.**

विशेषतया कोऽपि न व्रणितः ? = **No one was seriously injured ?**

वस्तूनि तावन्ति एव वा ? = **Only so much luggage ?**

बहुधा श्रान्तः अस्मि भोः । = **Very tired, you know.**

त्रिचक्रिका किमर्थम् ? = **Why rickshaw ?**

लोकयानेन गच्छामः । = **Let's go by bus.**

लोकयानेन = **By bus**

त्रिचक्रिकायाम् = **In a rickshaw**

सख़यानेन = **By luxury bus**

पादाभ्याम् = **On foot**

सामिसख़यानेन = **By semi-luxury bus**

संलपन्तः = **talking**

कः प्रतीक्षते भोः ? = **Who waits for ?**

त्रिचक्रिकायां एव गच्छामः । = **Let's go by rickshaw only.**

किमर्थं वृथा व्ययः इति ? = **Why waste money unnecessarily ?**

बहुकालतः प्रतीक्षां करोमि । = **I have been waiting for long.**

कदा प्रस्थितः ? = **When did you start ?**

काशीं रामेश्वरं सर्वं दृष्टवान् वा ? = **Have you visited Kashi and Rameshvar ?**

कियत् सुन्दरं अस्तीति जानाति वा ? = **Do you know how nice it is ?**

महद् अद्भुतम् । = **Fantastic.**

---

## ८. छात्राः = Students

अत्रैव कलाशालायां पठामि । = **Studying in a college here.**

सिद्धता कथम् अस्ति ? = **How is your preparation ?**

पाठ्यभागः एव न समाप्तः । = **Portions have not been completed.**

गणितश्रवणमात्रेण मम शिरोवेदना । = **Mathematics is a head-ache to me.**

गाढं अभ्यासः वा ? = **Studying very hard ?**

अद्य किमपि न पठितवान् एव । = **Couldn't read much today.**

मम अक्षराणि न सुन्दराणि । = **My handwriting is not good.**

एतां कादम्बरीं पठितवान् वा ? = **Have you read this novel ?**

बहु सम्यक् अस्ति । = **It is very interesting.**

बहु पूर्वमेव पठितवान् । = **I read it long ago.**

शीघ्रं पठित्वा ददामि भोः । = **I'll return it early after reading.**

अद्य उत्थाने विलम्बः सञ्जातः । = **Got up a bit late today.**

अहं गृहे एव त्यक्त्वा आगतवान् । = **I have left it at home.**

अद्य तु विरामः । = **Today is a holiday, anyway.**

भवतः वर्गशिक्षकः कः ? = **Who is your class teacher ?**

अद्य समवस्त्रेण गन्तव्यं वा ? = **Do we have to go in our uniforms today ?**

यावत् शालां गतवान् तावत् घंटा ताडिता । = **The bell went by the time I reached school.**

श्रीमन्, अन्तः आगच्छामि वा ? = **May I come in, sir ?**

श्रीमन्, विशेषकक्ष्यां स्वीकरोति वा ? = **Are you going to take a special class,sir ?**
लेखनीं एकवारं ददाति वा ? = **May I borrow your pen ?**
टिप्पणीं किञ्चित् ददाति वा ? = **Would you kindly lend me your notes ?**
ह्यः एव गिरीशः स्वीकृतवान् । = **Girish borrowed it yesterday.**
अहं तद्दिने वर्गं न आगतवान् आसम् । = **I did not attend the class that day.**
आगच्छतः भोः, क्रीडामः । = **Come on, let's play.**
पठनीयं बहु अस्ति भोः । = **I have a lot to read, you know.**
किं मम पठनीयं नास्ति वा ? = **Do you think I don't have anything to read ?**
पदवी अशीतितमे वर्षे समापिता वा ? = **Did you take your degree in the year 1980 ?**
सम्यक् न स्मरामि भोः । = **I do not remember exactly.**
तिष्ठतः, अहं स्मरामि तत् । = **Wait, I know it.**
श्वः आरभ्य सहाध्ययनं कुर्मः । = **Let us do combined study from tomorrow.**

---

## ९. परीक्षा = Examination

परीक्षारम्भः कदा इति ज्ञातः वा ? = **Do you know when is the examination going to begin ?**
प्रवेशपत्रं स्वीकृतं वा ? = **Have you taken the admission ticket ?**
परीक्षा अग्रे गता । = **The examination is postponed.**
वेलापत्रिका आगता वा ? = **Has the examination time table come ?**
परीक्षा कथं आसीत् ? = **How was the exam. ?**
प्रश्न पत्रिका किञ्चित् क्लिष्टा आसीत् = **The question paper was a bit tough.**
अतीव सल्लभा आसीत् । = **It was very easy.**
अहं प्रथमश्रेण्यां उत्तीर्णः । = **I have passed in I class.**
ह्यः फलितांशः प्रकटितः । = **The result was announced yesterday.**
अङ्कद्वयेन प्रथमश्रेणी न लब्धा । = **I missed I class by two marks.**
प्रश्नेषु विकल्पः एव नासीत् । = **There was no choice at all.**
फलितांशः श्वः ज्ञातः भविष्यति । = **The result will be announced tomorrow.**
रमेशः उत्तीर्णः वा ? = **Has Ramesh passed ?**
एकं पत्रं अवशिष्टं इति उक्तवान् । = **He has told me that he has to complete one paper yet.**
पठितं किमपि न स्मरामि भोः । = **Don't remember what I have read, you know.**
दशवारं पठितवान्, तथापि न स्मरामि । = **I read it ten times, even then I do not remember.**
प्रायशः द्वितीयश्रेणी लभ्येत । = **Most probably, I will pass in II class.**
अस्माकं गणे सर्वेऽपि उत्तीर्णाः । = **Everyone passed in our batch.**
प्रतिशतं कति अङ्काः प्राप्ताः ? = **What is the percentage ?**

---

## १०. चलनचित्रम् = Film

मासे कति चित्राणि पश्यति ? = **How often do you go to films in a month ?**
द्विवारं त्रिवारं वा ? = **Twice or three times.**
चित्रमन्दिरं पूर्णं आसीत् । = **It was house-full.**
महान् सम्मर्दः आसीत् । = **There was a lot of rush.**
चीटिका न लब्धा वा ? = **couldn't you get a ticket ?**
चित्रं कथं आसीत् ? = **How was the film ?**
करमक्तं इति दृष्टवान् । = **I just saw that it is tax-free.**
कः निर्देशकः ? = **Who is the director ?**
तर्हि समीचीनं एव स्यात् । = **In that case it should be good.**
संवादः/कथा समीचीना अस्ति । = **The dialogue/story is good.**
एतद् द्वितीयवारं पश्यन् अस्मि । = **I am seeing it for the second time.**
एकमपि चित्रं सम्यक् नास्ति । = **Not a single film is good.**
परह्यः एव दृष्टवान् अहम् । = **I saw it the day before yesterday.**
केवलं निस्सारं, जामिता भवति । = **Just bogus, terribly boring.**
तर्हि किमर्थं द्रष्टव्यम् ? = **Why should you see it then ?**
मयापि एकवारं द्रष्टव्यम् । = **I must see it once myself.**
सर्वे मिलित्वा गतवन्तः वा ? = **Did you all go together ?**
केवलं धनं व्यर्थम् । = **Just waste of money.**

---

## ११. शिक्षकः = Teacher

भवतः वेतनश्रेणी का ? = **What is your scale of pay ?**
इदानीं सर्वत्र समाना किल ? = **Now it is uniform everywhere, isn't it ?**
प्राचार्यस्य आदेशं दृष्टवान् वा ? = **Have you seen the Principal's memo (orders) ?**
अहो! तत्तः सामान्यम् । = **Oh!leave it. It is common.**
अधिवेतनं लब्धं वा ? = **Got your increment ?**
लिपिकं दृष्टवान् वा? = **Have you seen the clerk ?**
एवं चेत् कथं जीवामः ? = **How to live in that case ?**
महान् कोलाहलः इति श्रुतवान् । = **I heard, there was a lot of noise.**
पत्रिका पठिता वा ? वेतनं वर्धितम् । = **Read the newspaper. A rise in pay is announced.**
कदा आरभ्य अन्वयः ? = **When does it come into effect ?**
इदानीं कक्ष्या अस्ति वा ? = **Do you have classes now ?**
अद्य कक्ष्यां न स्वीकरोमि, इति सूचयतः । = **Tell them, I am not going to take classes today.**
प्राचार्यः आगतः वा ? = **Has the Principal come ?**

अस्मिन् मासे कति विरामः ? = How many holidays (are there) this month ?
परश्वः विरामः अस्ति वा ? = Is there a holiday, the day after ?
प्रश्नपत्रिका सज्जीकृता वा? = Is the question paper ready ?
अस्मिन् वर्षे फलितांशः कथम् ? = How is the result this year ?
एतावन्तः अङ्काः कथं लब्धाः इति ? = How did he manage to get such high marks ?
परीक्षकाणां औदार्यम् । = Examiners' large heartedness.
परीक्षा अन्या, योग्यता अन्या ! = Examination is one thing, ability another.
मौल्यमापनार्थं गच्छति वा ? = Are you going for valuation ?
मौल्यमापनं कुत्र ? = Where is valuation going to be ?
अस्वस्थः अपि आगतवान् । = I am here in spite of being ill.
इदानींतन बालास्तः ! = The students of the present day !
अये अत्र आगच्छतः ! = Hey, come here.
गणितस्य अध्यापकः अस्ति वा पश्यतः । = See, if the mathematics teacher is there.
ते तः बालाः किल ! = After all they are students.
किं भोः सम्यक् पठति किल ! = You are studying well, aren't you ?
संशयः अस्ति चेत् पृच्छन्तः ! = Ask if you have any doubts !
ज्ञातं किल ! = Understand !
पुनः एकवारं वदतः । = Beg your pardon (This means please repeat).
एकं अपि गणितं न कृतवान् वा ? = Haven't you worked out a single sum ?
एवं चेत् परीक्षायां किं करोति ? = At this rate how are you going to face examination?
सेवकं किञ्चित् आह्वयतः । = Please call the peon.
घण्टा नादिता वा ? = Has the bell gone ?
टिप्पणीं लिखन्तः । = Please take the notes.
एकोऽपि न जानाति वा ? = Does not even one know the answer ?
भवान् ज्ञातवान् वा ? वदतः किञ्चित् । = Have you understood? Come on. Repeat.
अद्य एतावदेव पर्याप्तम् । = Enough for today.
अस्य अनुच्छेदस्य अन्ते समापयामः । = Let us stop at the end of this paragraph.
श्वः एतद् सम्यक् पठित्वा आगन्तव्यम् । = Read this well when you come tomorrow.
गृहे किमपि पठन्ति वा ? = Do you read anything at home ?
किं भोः कोलाहलः । = Whaat is the noise there about ?
ह्यः कियत् पर्यन्तं पाठितवान् ? = Where did we stop yesterday ?

---

## १२. स्त्रियः = Women

गृहकार्यं सर्वं समाप्तं वा ? = Finished your household work ?
समाप्तप्रायम् । = Yes, finished for all practical purposes.
किं द्वित्रीणि दिनानि न दृष्टा ! = Not seen for two or three days ?

